समाहितः ॥ २६ ॥ द्वितीयं पारणं प्राप्य सोऽतिरात्रफलं लभेत् ।
सर्वं रत्नमयं दिव्यं विमानमधिरोहति ॥ २७ ॥ दिव्यमाल्याम्बर-
धरो दिव्यगन्धविभूषितः । दिव्यगन्धधरो नित्यं देवलोके मही-
यते ॥ २८ ॥ तृतीयं पारणं प्राप्य द्वादशाहफलं लभेत् । वस-
त्यमरसङ्काशो वर्षाण्ययुतशो दिवि ॥ २९ ॥ चतुर्थे वाजपेयस्य
पञ्चमे द्विगुणं फलम् । उदितादित्यसङ्काशं ज्वलन्तमनलोपमम्
॥ ३० ॥ विमानं विबुधैः सार्द्धमारुह्य दिवि गच्छति । वर्षायुतानि
भवने शक्रस्य दिवि मोदते ॥ ३१ ॥ षष्ठे द्विगुणमस्तीति सप्तमे
त्रिगुणं फलम् । कैलासशिखराकारं वैदूर्यमणिवेदिकम् ॥ ३२ ॥
परिक्षिप्तञ्च बहुधा मणिविद्रुमभूषितम् । विमानं समधिष्ठाय
कामगं साप्सरोगणम् ॥ ३३ ॥ सर्वान् लोकान् विचरते द्वितीय
इव भास्करः । अष्टमे राजसूयस्य पारणे लभते फलम् ॥ ३४ ॥
चन्द्रोदयनिभं रम्यं विमानमधिरोहति । चन्द्ररश्मिप्रतीकाशै-
र्हयैर्युक्तं मनोजवैः ॥ ३५ ॥ सेव्यमानं वरस्त्रीणां चन्द्रात् कान्त-
तरैर्मुखैः । मेखलानां निनादेन नूपुराणाञ्च निस्वनैः ॥ ३६ ॥
अङ्के परमनारीणां सुखसुप्तो विबुध्यते । नवमे क्रतुराजस्य
वाजिमेधस्य भारत ॥ ३७ ॥ काञ्चनस्तम्भनिर्यूहं वैदूर्यकृतवेदि-
कम् । जाम्बूनदमयैर्दिव्यैर्गवाक्षैः सर्वतो वृतम् ॥ ३८ ॥ सेवितं
चाप्सरःसङ्घैर्गन्धर्वैर्दिविचारिभिः । विमानं समधिष्ठाय श्रिया
परमया ज्वलन् ॥ ३९ ॥ दिव्यमाल्याम्बरधरो दिव्यचन्दनभूषितः ।
मोदते दैवतैः सार्द्धं दिवि देव इवापरः ॥ ४० ॥ दशमं पारणं
प्राप्य द्विजातीनभिवन्द्य च । किङ्किणीजालनिर्घोषं पताकाध्वज-
शोभितम् ॥ ४१ ॥ रत्नवेदिकसम्बाधं वैदूर्यमणितोरणम् । हेम-
जालपरिक्षिप्तं प्रवालवलभीमुखम् ॥ ४२ ॥ गन्धर्वैर्गीतकुशलै-
रप्सरोभिश्च शोभितम् । विमानं सुकृतावासं सुखेनैवोपपद्यते ॥ ४३ ॥
मुकुटेनाग्निवर्णेन जाम्बूनदविभूषिणा । दिव्यचन्दनदिग्धाङ्गो

## विशेषविज्ञप्तिरियम्।

द्वितीयसंस्करणे मुद्रितस्य भारतग्रन्थस्य चयमुपगतायां सङ्ख्यायामारब्धमस्माभिस्तृतीयसंस्करणमस्य। अधुना च प्रथम-संस्करणग्राहका द्वितीयसंस्करणग्राहकाश्च तुल्यमेव भारतखण्डं प्राप्नुवन्ति। तृतीयसंस्करणे मुद्रितानां भारतस्य खण्डितखण्डानां मुद्रणात् परं द्वितीयसंस्करणमुद्रितानि सर्वाण्येव भारतस्य साम्प्रतं विद्यमानान्युत्तरखण्डानि दातव्यानि युगपदेव ग्राहकेभ्यः। प्राप्स्यन्ते यदि त्रीण्येव संस्करणानि युगपत् परिसमाप्तिमागमिष्यन्तीति आशास्महे। कतिपयसंख्यानि भारतस्याधुनापि वितरणीयाः सन्ति। पुनः संस्करणमस्य च नो भावि स्थिरमेतत्। विज्ञापयामोऽतः ग्राहकाः कृपया गृह्णन्त्वाशु। प्रेषणव्ययादिकञ्च यथावत्।

दातव्य भारत कार्य्यालयः
कलिकाता।

श्रीप्रतापचन्द्र रायः।

